दित्याह ( अनुभवरूपइति ) योयं विज्ञानघनःइत्यादिश्रुतिरादिपदग्राह्या किंच घटज्ञानयोस्संबंध आत्मनिष्ठः ज्ञाननिष्ठत्वात्सत्तावत । अपिच आत्मा ज्ञानरूप आत्मान्यविषयान्यत्वात् ज्ञानवत नचाप्रयोजकता आत्मा यदि यावत्स्वस्थितिसमानकालीनज्ञानाविषयत्वे सति ज्ञान रूपो न स्यात् स्वनिष्ठप्रकारकस्वविशेष्यकसंशयादिविषयः स्यात घटादिवदिति बाधकतर्कसत्त्वात्तश्च जीवः स्वप्रकाशः ॥

म० प्र०–जीवः–जीवपदलक्ष्यः, चिद्रूपत्वात्–जडभिन्नत्वात्, चिद्वत्–ज्ञानत्वेनाभिमतमुख्यज्ञानपदार्थवत् ( सजातीयेति ) नच दीपादावपि तेजस्त्वेन सजातीयप्रकाशाप्रकाश्यत्वसत्त्वात्स्वप्रकाशत्वं स्यादिति वाच्यम । इष्टत्वादन्यथाविभुत्वे सतीत्यस्यापिस्वप्रकाशलक्षणे निवेशादिति । परममूले ( वृत्तिप्रतिबिंबितचैतन्यमिति ) वृत्तिप्रतिबिंबितचैतन्याश्रयोहमिति प्रकारेणोपपद्यते नचास्मदर्थस्य प्रमातुः कथं वृत्तिप्रतिबिंबितचैतन्याश्रयत्वमिति वाच्यम । प्रमातुर्वृत्त्याश्रयत्वेन वृत्त्युपहितचैतन्याश्रयत्वस्य संभवात् । नच वृत्त्याश्रयत्वमन्तःकरणस्यैव न प्रमातुरिति वृत्त्याश्रयत्वेनेत्युक्तेरनुपपत्तेरिति वाच्यं, प्रमातुरन्तःक० घटितत्वेनान्तःकरणवृत्त्याश्रयत्वस्य संभवादित्यर्थः । घनः–मूर्तिः, संबंधः–विषयविषयिभावादिसंबंधः. आत्मनिष्ठः–आत्मनिष्ठाधिकरणतानिरूपिताधेयतावान, ज्ञाननिष्ठत्वात्–ज्ञाननिष्ठाधिकरणतानिरूपिताधेयतावत्त्वात् । नच गुणत्वात्मत्वविषयेन्द्रियसंयोगजन्यत्वादिषु ज्ञाननिष्ठत्वस्य सत्त्वेन गुणत्वादिषु व्यभिचार इति वाच्यम् । ज्ञाने गुणत्वादीनामनंगीकारात्, नचोभयवादिसंमतदृष्टांताभावेनानुमानं न संभवतीति वाच्यम । परसंमतदृष्टांतेनाप्यनुमानसंभवादिति. आत्मा–लक्ष्यात्मपदार्थः ( आत्मान्यविषयान्यत्वादिति ) विषयान्यत्वादित्युक्तेह्यात्मनोपि वृत्तिविषयत्वेन स्वरूपासिद्धिः स्यात्तद्वारणायात्मान्येति आत्मान्यत्वादित्युक्ते हि पुनः स्वरूपासिद्धिस्तद्वारणाय विषयान्यत्वेति ( यावत्स्वस्थितेरिति ) यावत् यावत्कालपर्यंतं स्वस्थितिः सुखदुःखादिस्थितिस्तत्समानकालीनं यज्ज्ञानं सुखदुःखादिज्ञानं तदविषयत्वे सति ज्ञानरूपत्वाभावो घटादिषु तत्रैव स्वं घटादयस्तन्निष्ठं यत् घटत्वादिकं तत्प्रकारकघटादिविशेष्यकसंशयादिविषयत्वमपिप्रथमस्वपदेन घटादिकं धर्तुं न शक्यते घटादिज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन यावद्घटादिस्थितिसमानकालीनघटादिज्ञानाप्रसिद्धेः सुखादिज्ञानस्य तु सुखादिस्थितिसमानकालीनत्वं संभवति सुखादीनां ज्ञानसत्ताकत्वेनाज्ञातसत्ताकत्वाभावात् । यत्र ज्ञानरूपत्वाभावस्तत्र स्वनिष्ठप्रकारकस्वविशेष्यकसंशयादिविषयत्वमित्युक्ते हि सुखादीनामपि संशयादिविषयत्वं स्यादतः स्वस्थितिसमानकालीनज्ञानाविषयत्वे सतीत्युक्तं उक्ततर्कासंभववारणाय यावदिति यावत्कालपर्यंतम्॥

**मू०-अधुना तत्त्वं पदार्थयोरैक्यं महावाक्यप्रतिपाद्यमभि-
धीयते ॥**

**शि० म०-विषयप्रतियोगिनिरूपणानंतरं विषयनिरूपणं प्रतिजानीते ( अधुनेति । महावाक्येति ) सत्यं ज्ञानमनंतं ब्रह्मेत्यादि वाक्यमवांतरवाक्यं तत्त्वमस्यहं ब्रह्मास्मि अयमात्मा ब्रह्मेत्यादि वाक्यं महावाक्यं तेन शक्त्या लक्षणया वा तदैक्यं प्रतिपाद्यमित्यर्थः। अनेन चास्य विषयत्वमुक्तम् अन्याप्रतिपाद्यत्वे सति तत्प्रतिपाद्यस्य तद्विषयत्वात्। द्वादशलक्षणीधर्ममीमांसा सपरिकरधर्मनिरूपणपरा न सिद्धार्थपरा विधिवाक्यानामेव तत्र विचारितत्वात् ॥**

म०प्र०-स्वस्थितिर्भवति तावत्कालपर्य्यंतं ज्ञानं विवक्षितं नापि न्यूनकालिकं नाप्यधिककालिकमतो घटादिकालन्यूनकालिकघटादिज्ञानमादाय नोक्ततर्कासंभवः आत्मा यदि यावत्स्वस्थितिसमानकालीनज्ञानाविषयत्वे सति ज्ञानरूपो न स्यात्तदा संशयादिविषयः स्यादित्युक्तं हि आत्मा गुणो न वेति गुणत्वप्रकारकात्मविशेष्यकसंशयस्तु भवत्येवेति नैयायिकं प्रत्यनिष्टोद्भावनमेव न स्यादतः स्वनिष्ठप्रकारकेति अहं वा न वेति अहंत्वादिप्रकारकसंशयः स्यादिति भावः। स्वविशेष्यकपदानादाने तु इदं शरीरमहं वा नवेत्यहंत्वादिप्रकारकेदमर्थविशेष्यकसंशयो नैयायिकमते भवत्येवेति पुनरपि नैयायिकंप्रत्यनिष्टापादनं न स्यादतः स्वविशेष्यकेति अहं वा नवेत्यहंत्वप्रकारकास्मद्विशेष्यकसंशयः स्यादिति भावः ( प्रतियोगिनिरूपणेति ) ऐक्यनिरूपकतत्त्वंपदार्थनिरूपणेत्यर्थः अवांतरवाक्यं-तत्त्वं पदार्थान्यतरबोधकवाक्यम्। महावाक्यं-तत्त्वंपदार्थैक्यबोधकवाक्यं तेन-महावाक्येन, तदैक्यं-तत्त्वंपदार्थैक्यम्, अनेन-महावाक्यप्रतिपाद्यमिति वाक्येन, अस्य-ऐक्यस्य अन्यथाप्रतिपाद्यत्वे सति यत्प्रतिपाद्यत्वं यत्र तत्रतद्विषयत्वमिति सामान्यव्याप्तिमभिप्रेत्यैक्यस्य वेदांतविषयत्वे हेतुमाह ( अन्याप्रतिपाद्यत्वेसतीति ) वेदांतान्याप्रतिपाद्यत्वे सतीत्यर्थः। तत्प्रतिपाद्यस्य-वेदांतप्रतिपाद्यस्य। तद्विषयत्वात्-वेदांतविषयत्वात् ननु "तत्तु समन्वयात्" इति सूत्रे द्वादशाध्यायधर्ममीमांसाविचारितकर्मवाक्यैरपि ब्रह्मणः प्रतिपाद्यत्वस्वीकारात्सत्यतासिद्धिरित्याशंक्याह ( द्वादशलक्षणीति ) द्वादशाध्यायेत्यर्थः, सपरिकरधर्मनिरूपणपरा-अंगसमूहसहितयागादिरूपधर्मप्रतिपादकवाक्यार्थनिरूपणपरा, विधिवाक्यानां-लिङादिघटितयागादिबोधकवाक्यानां तत्र-धर्ममीमांसायाम् ( विचारितत्वादिति) द्वादशलक्षणमीमांसाविचारितकर्मवाक्यानां परंपरया ब्रह्मप्रतिपत्तावुपयोगो न तु तत्त्वमस्यादिवाक्यवत्साक्षादुपयोग इति भावः ॥

मू०—ननु नाहमीश्वर इत्यादिप्रत्यक्षेण किंचिज्ज्ञत्वसर्वज्ञत्ववि-
रुद्धधर्माश्रयत्वादिलिंगेन द्वासुपर्णेत्यादिश्रुत्या ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एवच ॥
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
इत्यादिस्मृत्या च जीवपरभेदस्यावगतत्वेन तत्त्वमस्या-
दिवाक्यमादित्यो यूपो यजमानः प्रस्तर इत्यादिवाक्यव-
दुपचरितार्थमेवेति चेन्न भेदप्रत्यक्षस्य संभावितकरणदोष-
स्यासंभावितदोषवेदजन्यज्ञानेन बाध्यमानत्वात् अन्यथा
चंद्रगताधिकपरिमाणग्राहिज्योतिःशास्त्रस्य चंद्रप्रादेश-
ग्राहिप्रत्यक्षेण बाधापत्तेः पाकरक्ते घटे रक्तोयं न श्याम
इति वत्साविशेषणे हीति न्यायेन जीवपरभेदग्राहिप्रत्य-
क्षस्य विशेषणीभूतधर्मभेदविषयत्वाच्च ॥

शि० म०—वेदांताश्च न विधिपराः । तात्पर्यविषयब्रह्मासिद्धिप्रसं-
गात् । तथाच न सत्यतासिद्धिरिति तत्त्वमस्यादिवाक्यं न जीवेश्वरा-
भेदे प्रमाणं भेदग्राहिबहुप्रमाणविरोधादिति शंकते ( नन्विति । किंचि-
ज्ज्ञत्वेति ) जीवेश्वरौ परस्परंभिन्नौ किंचिज्ज्ञत्वसर्वज्ञत्वलक्षणविरुद्धधर्मा-
श्रयत्वात् । दहनतुहिनवदित्यर्थः । तर्हि तत्त्वमस्यादि वाक्यं न प्रमाणं
स्यादित्यत आह ( तत्त्वमस्यादीति ) ननु प्रत्यक्षस्य ज्येष्ठतया प्रबलत्वेन
बाधकत्वमित्यत आह ( अन्यथेति ) तर्हि भेदप्रत्यक्षस्याप्रामाण्यकल्पन-
मेवाभेदप्रामाण्ये बाधकमित्यत आह ( पाकेति ) ॥

म० प्र०—विधिपराः—विधीयमानयागादिकर्मपराः ( ब्रह्मासिद्धिप्रसंगादिति )
वेदान्तानां विधिपरत्वे ब्रह्माप्रतिपादकत्वादिति शेषः । तथाच—वेदांतानां विधिपर-
त्वाभावेसति. ( विरुद्धेति ) एकाधिकरणावृत्तीत्यर्थः । किंचिज्ज्ञत्वसर्वज्ञत्वलक्षणे-
तिविशेषकथनं तु प्रकृताभिप्रायेण हेतुस्तु विरुद्धधर्माश्रयत्वमेवेति ध्येयम । दहन-
तुहिनवत्—अग्निहिमवत् । परमसूले ( संभावितकरणदोषस्येति ) स्वाश्रयकरणजन्य-
त्वसंबंधेन संभाविताः करणानामिन्द्रियाणामपाटवत्वादयो दोषा यस्मिन् भेद-
प्रत्यक्षे स तथा तस्येत्यर्थः । परमसूले ( अन्यथेति ) प्रत्यक्षस्यज्येष्ठतया प्रबल-
त्वेनागमजन्यज्ञानबाधकत्वस्वीकारे इत्यर्थः । तर्हि—भेदप्रत्यक्षस्यागमजन्यज्ञानेन

बाध्यत्वस्वीकारे सति परममूले ( सविशेषणेहीति ) शिखी ध्वस्तः दंडी जातः रक्तोयं न श्याम इत्यादौ प्रसिद्धेन सविशेषणेहि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इतिन्यायेनेत्यर्थः ॥

**मू०–अत एव नानुमानमपि प्रमाणमागमविरोधात् मेरुपाषाणमयत्वानुमानवत् नाप्यागमांतरविरोधस्तत्परातत्परवाक्ययोस्तत्परवाक्यस्य बलवत्त्वेन लोकसिद्धभेदानुवादिद्वासुपर्णादिवाक्यापेक्षया ॥**

शि० म०–अनुमानं च न भेदे प्रमाणं नरशिरःशौचानुमानवदागमबाधादित्याह ( अतएवेति ) भेदग्राहिश्रुतिस्मृतिविरोधं निरस्यति ( नाप्यागमांतरेति ) ननु द्वासुपर्णेत्यादि वाक्यं प्रतीयमानभेदपरमेवास्तु बाधकाभावादित्याशंक्य शास्त्रस्याज्ञातार्थपरत्वात् । भेदस्य च प्रत्यक्षादिप्रमाणावगतत्वात् न तत्परत्वमित्याह ( लोकसिद्धेति ) ननु तत्त्वमस्यादि वाक्यमपि नाभेदपरं प्रस्तरादिवाक्यवत्तस्योपचरितार्थत्वस्योक्तत्वादित्याशंक्य किंबाधकसत्त्वादभेदपरत्वाभावस्तात्पर्यस्य ग्राहकाभावाद्वा नाद्यः । प्रस्तरस्य यजमानत्वे बाधकवदभेदे बाधकाभावात् ॥

म० प्र०–अनुमानंच–जीवेशौ परस्परभिन्नौ विरुद्धधर्माश्रयत्वाद्दहनतुहिनवदित्यनुमानं च नरशिरःशौचानुमानवत्–सस्नेहं नरशिरोस्थि शुचिरस्थित्वात् शंखवदित्यनुमानं 'स्पृष्ट्वा नरास्थि सस्नेहं सवासा जलमाविशेत्' इत्याद्यागमेन यथा बाधितं तद्वत्, आगमबाधात्–तत्त्वमस्यादिवाक्यरूपागमबाधात् परममूले ( अतएवेति ) वक्ष्यमाणहेतोरेवेत्यर्थः । परममूले ( मेरुपाषाणमयत्वानुमानवदिति ) मेरुःपाषाणमयः पर्वतत्वाद्विंध्यादिवदित्यनुमानं सर्वतः सौवर्णः कुलगिरिराजोमेरुरित्याद्यागमेन यथा बाधितं तद्वदित्यर्थः । प्रस्तरादिवाक्यवत्–यजमानः प्रस्तर इत्यादिवाक्यस्य यथा सादृश्यरूपलाक्षणिकार्थपरत्वं तद्वत्, तस्य–तत्त्वमस्यादिवाक्यस्य ( उपचरितार्थत्वेति) सादृश्यादिरूपलाक्षणिकार्थकत्वेत्यर्थः । बाधकवत्–प्रत्यक्षप्रमाणरूपबाधकवत्, अभेदे–तत्त्वंपदार्थाभेदे बाधकाभावात् प्रत्यक्षादिप्रमाणरूपबाधकाभावात् नच नाहमीश्वर इति प्रत्यक्षादिकमभेदे बाधकमिति वाच्यम् । तस्याप्रमात्वेन बाधकत्वाभावात् । सविशेषणे हीत्यादिन्यायेन विशेषणीभूतधर्मभेदविषयकत्वाच्चेति ॥

उपक्रमोपसंहाराद्यवगताद्वैततात्पर्य्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात् । नच जीवपरैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः शीतस्यैव जलस्यौपाधिकौष्ण्याश्रयत्ववत्स्वभावतोनिर्गुणस्यैव तस्यान्तःकरणाद्युपाधिककर्तृत्वाद्याश्रयत्वप्रतिभासोपपत्तेः यदिच जलादावौष्ण्यमारोपितं तदा प्रकृतेपि तुल्यं नच सिद्धांते कर्तृत्वस्य क्वचिदप्यभावादारोप्यप्रमाहितसंस्काराभावे कथमारोप इति वाच्यं लाघवेनारोप्यविषयसंस्कारत्वेनैव तस्य हेतुत्वात्

शि० म०–नच प्रस्तरादिवाक्यवत्स्तुतिपरत्वं तात्पर्यबाधकं प्रस्तरं प्रहरतीति विधिशेषतयावगतस्य प्रस्तरस्य स्तुतिविषयत्वेपि जीवेश्वरयोर्विध्यन्वयादर्शनेन स्तुतिविषयत्वायोगात् न द्वितीय इत्याह ( उपक्रमेति ) अर्थापत्तिमाशंक्य निराकरोति ( नचेति ) ॥

म०प्र०–( प्रस्तरमिति ) अग्न्यधिकरणकदर्भमुष्टिकर्मकप्रक्षेपेणेष्टं [illegible] दित्यर्थः । स्तुतिपरत्वं–तत्त्वमस्यादिवाक्यस्य जीवस्तुतिपरत्वं, तात्पर्यबाधकम् तत्त्वमस्यादिवाक्यस्याभेदतात्पर्यबाधकम । विधिशेषतया–विधीयमानप्रक्षेपरूपकर्मशेषतया स्तुतिविषत्वेपि–यजमानःप्रस्तर इति स्तुतिविषयत्वेपि, जीवेश्वरयोः–जीवेश्वरपदलक्ष्ययोः, विध्यन्वयेति–विधीयमानकर्मान्वयेत्यर्थः । परममूले ( विरुद्धधर्माश्रयत्वानुपपत्तिरिति ) किंचिज्ज्ञत्वसर्वज्ञत्वविरुद्धधर्माश्रयत्वानुपपत्त्या [illegible] कल्प्यते इति भावः । परममूले ( प्रकृतेपीति ) आत्मन्यपीत्यर्थः । परममूले ( तुल्यमिति ) कर्तृत्वादिकमारोपितमित्यर्थः परममूले ( अभावादिति ) पारमार्थिककर्तृत्वाद्यभावादित्यर्थः । परममूले ( आरोप्यप्रमाहितसंस्काराभावेइति ) आरोप्यकर्तृत्वादिविषयकपूर्वकालीनप्रमाजन्यसंस्काराभावे इत्यर्थः । परममूले ( तस्येति ) आरोप[illegible]स्येत्यर्थः । भ्रमप्रमान्यतरजन्यारोप्यविषयकसंस्कारत्वेनारोप[illegible]संस्कारस्य हेतुत्वमिति भावः ॥

मू०–नच प्राथमिकारोपे का गतिः कर्तृत्वाद्यध्यासप्रवाहस्यानादित्वात् तत्त्वंपदवाच्ययोर्विशिष्टयोरैक्यायोग्यत्वेपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव अत एव तत्प्रतिपादकतत्त्वमस्यादिवाक्यानामखंडार्थत्वंमेयमित्यादिवाक्य-

वत् नच कार्य्यपराणामेव प्रामाण्यं चैत्र पुत्रस्ते जात इत्यादौ सिद्धेपि संगतिग्रहात् ॥

शि० म०-संप्रदायमतेनाह ( लक्ष्यस्वरूपयोरिति ) नन्वस्तु वाक्ये लक्ष्यस्वरूपमात्रपरत्वं ततः किमित्यत आह ( अतएवेति ) ननु वेदांता न ब्रह्मपराः पदानां कार्य्यान्वितशक्त्यनुरोधेन कार्य्यपरत्वेनैव प्रामाण्यावधारणात्। तथाचादित्यो ब्रह्मेतिवत्तत्त्वमसीत्यभेदोपासनापरमित्याशंक्य सिद्धेपि संगतिग्रहस्योक्तत्वादिति दूषयति ( नचेति ) किंच नाभेदोपासनात्र विधेया उपासीतेत्यश्रवणात्। तत्त्वमस्यंते तद्धास्य विजज्ञाविति ब्रह्मविद्याया एव श्रवणाच्च। किंच 'तत्त्वमस्यादिवाक्यं नोपासनापरम् "अभयं वैजनकप्राप्तोसि तदात्मानमेवावेत् अहंब्रह्मास्मि" इति स्पष्टार्थश्रुत्यंतरानुसारेणास्पष्टार्थश्रुतेरपि व्याख्यानौचित्यात्। अत एव तं चतुर्धाकरोतीति वचनं स्पष्टार्थकवचनांतरानुसारादाग्नेयविषयं व्याख्यातम्। नचाहं ब्रह्मेत्यत्राप्यभेदोपासनमिति युक्तमवेदिति विरोधात्॥

म०प्र०-वाक्ये-तत्त्वमस्यादिवाक्ये. ततः-तत्त्वमस्यादिवाक्यानां लक्ष्यस्वरूपमात्रपरत्वात्, किं-किंफलम्। परममूले ( अतएवेति )-तत्त्वंपदलक्ष्यस्वरूपैक्यस्योपपादितत्वादेवेत्यर्थः। कार्य्यान्वितशक्त्यनुरोधेन-कृतिसाध्यविशिष्टशक्त्यभ्युपगमेन. सिद्धेपि-प्रयोगकालकृत्यसाध्येपि पुत्रादौ. संगतिग्रहस्य-पुत्रादिपदशक्तिग्रहस्य. अत्र-तत्त्वमसिवाक्यादौ ( तद्धास्येति ) अस्य-पितुर्वाक्यात्तद्ब्रह्म, ह प्रसिद्धः विजज्ञौ-श्वेतकेतुर्विज्ञातवानित्यर्थः। अभयम्-भयशून्यंब्रह्म ( तदात्मानमेवेति ) तदविद्याविशिष्टतयाऽधिकारित्वेनावस्थितं ब्रह्मनामित्वं संसारी किंतु सकलसंसारधर्मरहितं सच्चिदानंदैकरसं ब्रह्मैवासीति दयालुना आचार्य्येणबोधितमात्मानमेवावेदित्यर्थः। अतएव-स्पष्टार्थकश्रुत्यंतरानुसारेणास्पष्टार्थकश्रुतिव्याख्यानस्योचितत्वादेव, तम्-पुरोडाशम् ( स्पष्टार्थकवचनान्तरेति ) आग्नेयं पुरोडाशंचतुर्धाकरोतीति वचनांतरेत्यर्थः ॥

मू०-एवं सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहासपुराणप्रतिपाद्यं जीवपरैक्यं वेदांतशास्त्रस्य विषय इति सिद्धम् ॥

इति श्रीवेदांतपरिभाषायां विषयपरिच्छेदः ॥ ७ ॥

शि०म०-आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥
"तत्र को मोहः कः शोक एकत्वमनुपश्यतः" ॥
इत्येकत्वज्ञानस्यैव श्रुतौ पुमर्थत्वप्रतिपादनाच्च ॥

जाग्रत्स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते ॥
तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधात्प्रमुच्यते ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहमिति ॥
कैवल्योपनिषद्वचनाच्च ॥
यथा नदीनदो लोके सागरेणैकतामियात ॥
तद्वदात्माक्षरेणासौ निष्कलेनैकतामियात ॥

इतिकूर्मपुराणवचनाच्च ॥
यदस्थूलमनण्वाख्यमप्रमेय[illegible]र्णकम् ॥
तद्ब्रह्माहमिति ज्ञात्वा ब्र[illegible]पदनैध्रुवमिति ॥
विश्वामित्रस्मृतेश्च ॥
अहमेवपरंब्रह्मवासुदेवाख्यमव्ययम् ॥
इतिस्यान्निश्चितो मुक्तो[illegible] द्र एवान्यथाभवेदिति ॥
वरूचिवचनाच्च ॥
अद्यात्मव्यतिरेकेण द्वितीयं यो न पश्यति ॥
ब्रह्मभूतः स एवेह दक्षपक्ष उदाहृतः ॥
इतिदक्षस्मृतेश्च ॥
सर्वभूतांतरस्थाय नित्यशुद्धचिदात्मने ॥
प्रत्यक्चैतन्यरूपाय मह्यमेव नमोनमः ॥

इति वसिष्ठवचनाच्च अन्यथा तत्त्वमस्यादिवाक्यस्य भेदग्राहिप्रमाणविरोधेनाभेदे प्रामाण्याभावे श्रुतिपुराणवचनानि बाध्येरन् तस्मात्सिद्धं तत्त्वमस्यादिवाक्यस्य जीवब्रह्मैक्यपरत्वं तदेतत्सर्वमभिप्रेत्य उपसंहरति ( एवमिति ) ॥

इति श्री धर्मराजाध्वरींद्रात्मजश्रीरामकृष्णाध्वरिविरचिते
वेदांतचूडामणौ विषयपरिच्छेदः ॥ ७ ॥

म० प्र०—नदी-गंगायमुनादिः, नदः-सिंध्वादिः, दक्षपक्षः-स्वपक्षः । उदाहृतः-मयाकथितः । अन्यथा—अहंब्रह्मास्मीत्यादिवाक्यानामभेदोपासनापरत्वस्वीकारे अन्यथेत्यस्यैव वा विवरणं तत्त्वमस्यादिवाक्यस्येत्यादि ॥

इति श्रीमदुदासीनवरश्रीमद्ब्रह्मविज्ञानाभिधगुरुप्रसादलब्धोदासीनासग्दासशब्दवांन्याविर्भूतायांधर्मराजाध्वरींद्रात्मजरामकृष्णाभिधेयविरचितविषयपरिच्छेदवेदान्तशिखामणेः प्रभायां विषयपरिच्छेदः समाप्तः ॥ ७ ॥

# अथ प्रयोजनपरिच्छेदः ८.

मू०-इदानीं प्रयोजनं निरूप्यते यदवगतं सत् स्ववृत्तितये-ष्यते तत्प्रयोजनं तच्च द्विविधं मुख्यं गौणंचेति तत्र सुखदुःखाभावौ मुख्ये प्रयोजने तदन्यतरसाधनं गौणं प्रयोजनं सुखं चद्विविधं सातिशयं निरतिशयं चेति ॥

शि० म०-( यदवगतमिति ) यद्येन रूपेण स्ववृत्तितया अवगतं तथैवेष्यते तेन रूपेण च प्रयोजनमित्यर्थः। अनागतसुखादिकं च स्ववृत्तितया सुखत्वेनानुमानात् ज्ञातं तेन रूपेणेष्यते सुखं मे भूयादिति पशुपुत्रादिकं त्विष्टसाधनत्वेनावगतमिच्छाविषय इति तेन रूपेण प्रयोजनं तथाच सुखादेर्गुणत्वादिनावगतौ सुखत्वादिना स्वात्मनि बाधदशायां चेच्छाविरहेपि न दोषः। नच पशुपुत्रादीनां कथं स्ववृत्तित्वं परंपरासंबंधेन स्ववृत्तित्वेऽतिप्रसंगादिति वाच्यम्। स्वलक्षणसंबंधेन स्ववृत्तित्वाभ्युपगमात्। स्वरूपसंबंधस्यापि साक्षात्संबंधत्वात्। द्वैविध्यमेवाह ( मुख्यमिति ) यत्स्वासाधारणरूपेणावगतं सदिष्यमाणं तन्मुख्यं प्रयोजनमतिरिक्तधर्मज्ञानापेक्षमिष्यमाणं गौणमित्यर्थः। तदुभयं क्रमेणोदाहरति ( तत्रेति ) सिद्धांते च सुखस्य द्वैविध्यमित्याह ( सुखंचेति )।

संसारदुःखानलदग्धचेतायं शान्तभूतं शरणं गतोऽस्मिन् ॥
शान्तिसमाप्नोति परां नरोऽयं समे धवः श्रीगुरुनानकोऽस्तु ॥ १ ॥

म० प्र०-( यद्येन रूपेणेति ) यत् सुखादिकं येनरूपेण-सुखत्वादिरूपेण स्ववृत्तितयाऽवगतम्-ममेदं सुखमिति स्वसंबंधितया ज्ञातं सत्, तथैवेष्यते-सुखादिकं मे भूयादिति सुखत्वादिरूपेण स्ववृत्तितयेच्छाविषयीक्रियते तेन रूपेण सुखत्वादिरूपेण सुखादिकं प्रयोजनमित्यर्थः। यत्स्ववृत्तितयेष्यते इत्युक्तेहि राजसुखराजदारादेरपि ममेदं भूयादिति स्ववृत्तितयेच्छाविषयत्वेन राजसुखादावतिव्याप्तिः स्यात्तद्वारणाय स्ववृत्तितयावगतमिति दुःखादावतिव्याप्तिवारणाय स्ववृत्तितयेष्यते इति लक्ष्ये लक्षणं योजयति ( अनागतेति । स्ववृत्तितयेति ) अनागतसुखादिकं स्ववृत्तिविलक्षणसुखत्वादिमत्त्वादेतत्कालीनसुखादिवदिति सुखत्वादिहेतुनास्व-

वृत्तितयाऽवगतमनागतसुखादिकं तेन रूपेण सुखादिकं मे भूयादिति सुखत्वादिरूपेणेष्यते इति सुखत्वादिरूपेणागतसुखादिकं प्रयोजनमित्यर्थः । येन रूपेण तथैवेष्यते इति शब्दयोः फलमाह ( तथाचेति ) नदोषः–अव्याप्तिरूपदोषो नास्ति, परंपरासंबंधेन–स्वसंयुक्तसंयुक्तसंयुक्तत्वादिरूपपरंपरासंबंधेन स्वपुत्रादिकं तत्संयुक्तमाकाशादिकं तत्संयुक्तं जीवदेहादिकं तत्संयुक्तत्वं जीवात्मनीति संबंधवाक्यार्थः । अतिप्रसंगात्–रासभपुरीषादेरपि जीवात्मवृत्तित्वप्रसंगात्, स्वलक्षणसंबंधेन–संबंधिद्वयसत्त्वरूपस्वरूपसंबंधेन ( यदिति) सुखादिकमित्यर्थः ! स्वासाधारणरूपेण-सुखाद्यसाधारणसुखत्वादिरूपेण नच दरिद्राणां राजसुखंमुख्यप्रयोजनं स्यात्तस्य सुखाद्यसाधारणसुखत्वादिरूपेणावगतत्वे सतीष्यमाणत्वादिति वाच्यम् । स्ववृत्तितदितरस्यापि निवेशादिति, अवगतं–प्रमाज्ञानविषयः अतिरिक्तधर्मज्ञानापेक्षम्–यागादिवृत्तियागत्वाद्यतिरिक्तेष्टसाधनत्वादिरूपधर्मज्ञानापेक्षम् ॥

मू०–तत्र सातिशयं सुखं विषयानुषंगजनितान्तःकरणवृत्तितारतम्यकृतानंदलेशाविर्भावविशेषः "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति" इति श्रुतेः। निरतिशयं सुखं च ब्रह्म व आनंदो ब्रह्मेतिव्यजानात् विज्ञानमानंदं ब्रह्मेत्यादिश्रुतेः आनंदात्मकब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्तिश्च ॥

शि० म०–तत्र जन्यसुखं सातिशयमित्याह ( तत्रसातिशयमिति ) यथा काचिदन्तःकरणवृत्तिः सत्त्वगुणजन्यतयानेनन्यगतज्ञानांशप्रतिबिंबग्राहित्वेन ज्ञानं तथा तादृशीवृत्तिस्तद्गतानंदलेशप्रतिबिंबग्राहकत्वात्सुखमिति व्यपदिश्यते तस्यां सुखलक्षणायां वृत्तावन्वयव्यतिरेकाभ्यां स्रक्चंदनवनितादिविषयसंबंधो हेतुः । अत एव तत्तारतम्यात्सुखतारतम्यमतएवचास्मदादिसुखाद्राजसुखमुत्कृष्टं तस्मात्सार्वभौमसुखमुत्कृष्टतरं ततश्चेन्द्रादिसुखमुत्कृष्टतममिति । ननु यद्यानंदप्रतिबिंबग्राहित्वादन्तःकरणवृत्तिरेव सुखं तदा सन्निहितपरिपूर्णानंदस्यापि ग्रहणसंभवेन सर्वमपि सुखमेकरूपं स्यादिति चेन्न । परिपूर्णज्ञानवदखंडानंदस्य मूलाविद्यावृतत्वेनेदानीं तद्ग्रहणायोगात । नन्वस्तु निरतिशयानंदात्मकं ब्रह्म ततः किमित्यत आह ( आनंदात्मकेति ) ननु न ब्रह्मावाप्तिर्मोक्षस्तस्याः संसारदशायामपि भावात । निवृत्तशोकः–परिपूर्णानंदो न प्रागितिचेत्त-

र्ह्यावश्यकत्वात्सैव मुक्तिरित्यतस्तथैव पक्षांतरमाह ( शोकनिवृत्तिरिति ) अनर्थहेत्वविद्यानिवृत्तिरित्यर्थः ॥

म० प्र०–मुख्यप्रयोजनत्वमन्येच्छानधीनेच्छाविषयत्वम् अन्येच्छाधीनेच्छाविषयत्वं गौणप्रयोजनत्वमिति मुख्यप्रयोजनगौणप्रयोजनयोर्लक्षणान्तरं ग्रंथांतरीयमपि द्रष्टव्यमिति, तत्र–सातिशयनिरतिशयसुखयोर्मध्ये ( ज्ञानांशेति ) अंशांशिभावकल्पनयाचिदंशेत्यर्थः । अन्वयव्यतिरेकाभ्यां–स्रक्चंदनवनितादिविषयसंबंधसत्त्वे सुखलक्षणवृत्तिसत्त्वंस्रक्चंदनवनितादिविषयसंबंधाभावे सुखलक्षणवृत्त्यभावइत्यन्वयव्यतिरेकाभ्याम् । अत एव–सुखलक्षणवृत्तिप्रतिस्रक्चंदनवनितादिविषयसंबंधस्य हेतुत्वादेव, तत्तारतम्यात्–स्रगादिविषयसंबंधस्य न्यूनाधिक्यात्, अतएव–सुखस्य न्यूनाधिक्यसंभवादेव, तस्मात्–राजसुखात्, ततश्च--सार्वभौमसुखाच्च एकरूपं--एकरसं न्यूनाधिक्यरहितमिति यावत्, परिपूर्णज्ञानवत्--परिपूर्णज्ञानस्य मूलाज्ञानावृतत्वेन यथाभानाभावस्तद्वत्, इदानीं–संसारदशायां ( नद्भानेति ) अखंडानंदभानेत्यर्थः । ततः-ब्रह्मणोनिरतिशयानंदात्मकत्वात् किंसिध्यतीतिशेषः । तस्याः--ब्रह्मावाप्तेः नप्रागिति--ब्रह्मज्ञानात्पूर्वंनभवतीत्यर्थः आवश्यकत्वात् शोकनिवृत्तेरावश्यकत्वात्, सैव--शोकनिवृत्तिरेव, तथैव--पूर्वपक्ष्युक्तप्रकारेणैव ॥

मू०–ब्रह्मविद्ब्रह्मैवभवति तरति शोकमात्मविदित्यादिश्रुतेः
नतु लोकांतरावाप्तिः तज्जन्यवैषयिकानंदो वा मोक्षः
तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः ॥

शि० म०–क्रमेण प्रमाणमाह ( ब्रह्मेति ) तरति शोकमित्यत्र शोकहेतुत्वात्तत्पदेनाविद्योक्ता तरणंचात्र तरति ब्रह्महत्यामितिवन्निवृत्तिरूपं विवक्षितं नतु सेतुं तरतीतिवत् शोकस्य मूर्तत्वाभावादिति ध्येयम् । लोकांतरप्राप्तिरेव मुक्तिरिति तार्किकाः कल्पयंति तान्प्रत्याह ( नन्विति ) लोकांतरावाप्तेः सुखदुःखाभावान्यतरत्वाभावात् स्वतःप्रयोजनत्वाभावादिति भावः । ननु वैकुण्ठादिलोकविशेषं गतानामानंदाविर्भावो भविष्यतीति चेन्न स्वरूपानंदाभिव्यक्त्यभ्युपगमे लोकांतरगमनवैयर्थ्यात् । ननु न लोकांतरावाप्तिः स्वतो मोक्षः किंतु तत्रत्यवैषयिकानंदद्वारा सच तत्रैवेति न लोकांतरगमनवैयर्थ्यमिति चेन्न किंसैव मुक्तिः उत तत्रत्यवैषयिकानन्दः नाद्यः । आवश्यकत्वान्मुख्यप्रयोजनत्वाच्च तस्यैव मुक्तित्वौचित्यात् । अन्यथा मुक्तेः स्वतःपुरुषार्थत्वाभावप्रसंगात् नाद्वितीय इत्याह ( तज्जन्येति ) वैषयिकानंदस्यमुक्तित्वे-

तस्य स्वर्गादिवत्सातिशयत्वापत्तौ मोक्षस्य परमपुरुषार्थत्वाभावप्रसंगात् । किंच वैषयिकानंदस्य मुक्तित्वे मुक्तिदशायां भेदापत्तौ यत्र त्वस्य सर्वमात्मैवाभूत् ॥

यावन्मोक्षं तु भेदः स्याज्जीवस्य च परस्य च ॥
ततः परं न भेदोस्ति भेदहेतोरभावतः ॥
विभेदजनके ज्ञाने नाशमात्यंतिकं गते ॥
आत्मनो ब्रह्मणो भेदमसंतं कः करिष्यति ॥

इत्यादिवचनविरोधापत्तिः किंच मुक्तिदशायां शरीराभावेन वैषयिकानंदानुपपत्तिः तस्य शरीरजन्यत्वनियमात् । अत एव स्वर्गशरीरकल्पनं नचात्रापि तत्कल्प्यत इति युक्तं अशरीरं वावसंतमित्यादि श्रुतिविरोधात् । किंच न ब्रह्मविदां लोकांतरगमनमस्ति न तस्य प्राणा उत्क्रामंति ॥

म०प्र०-तत्पदेन-शोकपदेन, अत्र-तरतिशोकमितिश्रुतौ, तार्किकाः-तर्ककुशला मीमांसकाः लोकांतरगतेःस्वतःप्रयोजनत्वाभावादित्यन्वयः, स्वतः-स्वरूपेण, स्वरूपानंदाभिव्यक्त्यभ्युपगमे-स्वरूपाभिन्नानंदाभिव्यक्तेर्मोक्षपदार्थत्वाभ्युपगमे । तत्रत्येति-लोकांतरीयेत्यर्थः । सच-विलक्षणवैषयिकानंदस्तु, आवश्यकत्वात्-लोकांतरे आनंदस्यावश्यमभ्युपगमनीयत्वात्, तस्यैव-अवान्तरानंदस्यैव, अन्यथा-लोकांतरगतेर्मुक्तित्वाभ्युपगमे । यावन्मोक्षम्-मोक्षात्पूर्वम् । भेदः-औपाधिकभेदः,ततःपरम्-ऐक्यबोधादुत्तरं, तस्य-वैषयिकानंदस्य, अत्रापि-मुक्तावपि, तत्-शरीरं ( तत्कल्प्यत इति ) तस्य-विदुषः प्राणाः-वागादयो नोत्क्रामंति-देहाद्बहिर्नगच्छंति ॥

शि० म०-अत्रैव समवर्नीयते इति श्रुतेर्नचार्चिरादिना गमनं श्रूयते इति तद्वचनस्य सगुणोपासकविषयत्वेन ब्रह्मविद्गमनस्यानभिधानात् । अतएवाब्रह्मविदामपि पंचाग्निविद्योपासकानामर्चिरादिना गमनं नचैवं ब्रह्मविदां तदनभ्युपगतत्वेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त इत्यर्चिरादिना गतानामपुनरावृत्तिश्रवणं विरुध्येतेति वाच्यम् । सगुणोपासकानामर्चिरादिना गतानामश्व इव रोमाणि विधूय पापमित्यादिश्रुत्यवगतनिरस्तसमस्तदोषाणां ब्रह्मलोक एव संपादितश्रवणादिसाधनानां तत्रैव ब्रह्मसाक्षात्कारसंपादनेन ब्रह्मणा सह परममनस्यभ्युपगमेनाविरोधात । किंचलोकस्य प्रलये च विनाशे "सदेवसोम्येदमग्र आसीत" इत्यादिश्रुतिविरोधः । विनाशे मुक्तिशास्त्रवैयर्थ्यम् । अपिच वैकुण्ठादिप्राप्तानां मुक्तत्वेन जयविजयादीनां भगवद्द्वारिकाणां मुनिशापादिना

राक्षसादिदेहप्राप्तिर्नस्यात नचार्चिरादिगमनस्य परंपरया अपुनरावृत्ति-हेतुत्वेन जयविजयाद्यस्मन्मतेपि न निवर्त्तेरन् इति वाच्यम्। नहि जय-विजयावर्चिरादिना ब्रह्मलोकं गतौ किंतु वैकुंठाख्यं लोकांतरम् नहि तस्यैव ब्रह्मलोकत्वं प्रजापतेः सभांवेश्म प्रतिपद्यते इति वाक्यशेषेण कार्य्यब्रह्माधिष्ठितदेशविशेषस्यैव ब्रह्मलोकपदेनाभिधा नात्। अपिच "ब्रह्मविद्ब्रह्मैवभवति ब्रह्मैव सन् ब्रह्माप्येति" इत्या-दिश्रुतयो वैषयिकानंदस्य मोक्षत्वे न सामंजस्येनोपपद्येरन् अत एव "मामुपेत्यतुकौंतेय पुनर्जन्म न विद्यते" इति स्पष्टमेव स्वस्य प्राप्य-त्वंभगवतैवोक्तम्।

एकाकिनः सदाब्रह्मध्यायिनोयोगिनो हि ये।
तेषां तत्परमं स्थानं यद्वै पश्यंति सूरयः।

इति विष्णुपुराणे परमस्थानपदेन ब्रह्मस्वरूपमेवोक्तम् एतेन तांत्रिका णां मुक्तौ तारतम्यकल्पनमपास्तम् ब्रह्मात्मैक्ये अज्ञाननिवृत्तौ वा वि शेषाभावात तस्मान्निरस्तसमस्तक्लेशमभिव्यक्तपरिपूर्णानंदमात्माभिन्नं ब्रह्मैवमोक्ष इति श्रुतिस्मृतीतिहासपुराणन्यायकोविदैरभ्युपगंतव्य-मिति संक्षेपः॥

म०प्र०—ननु तर्ह्ययं मृत इति व्यवहारो न स्यादित्याशंक्यार्तभागप्रकरणस्थवाक्य-माह ( अत्रैवेति ) परे ब्रह्मण्येकतां गते विदुष्येव समवनीयंते लीयंते इत्यर्थः। तद्वच-नस्य—तेऽर्चिषमभिसंभवंतीत्यादेरर्चिरादिमार्गेण लोकांतरगमनप्रतिपादकवाक्यस्य अतएव—ब्रह्मविल्लोकांतरगमनानभिधानादेव, अब्रह्मविदामपि—शुद्धब्रह्मविषयकबोध शून्यानामेव। तदनभ्युपगतौ—अर्चिरादिमार्गेणगमनानभ्युपगतौ) एतेन अर्चिरादिमार्गेण प्रतिपद्यमानाः—ब्रह्मलोकंगताः, तत्रैव—ब्रह्मलोके एव, मुक्तिशास्त्रवैयर्थ्य—नसपुनरावर्त्तते इत्यादिमुक्तिशास्त्रवैयर्थ्यम्, तस्यैव—वैकुंठस्यैव ( कार्य्यब्रह्माधिष्ठितेति ) कार्य्य-ब्रह्मस्वामिकेत्यर्थः। अतएव—ब्रह्मावाप्तिर्मोक्षत्वादेव, सूरयः—ब्रह्मात्मैक्यविषयकबोध-वंतः, एतेन—वक्ष्यमाणहेतुना॥

मू०—ननु त्वन्मतेप्यानंदावाप्तेरनर्थनिवृत्तेश्च सादित्वे तुल्य-दोषः अनादित्वे मोक्षमुद्दिश्यश्रवणादौ प्रवृत्त्यनुपपत्तिरि-तिचेन्न सिद्धस्यैव ब्रह्मरूपस्यमोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेरनर्थनिवृत्तिरप्यधिष्ठानभूतब्रह्मस्व-रूपतया सिद्धैव॥

शि० म०—नन्वानंदावाप्तिरनर्थहेत्वविद्यानिवृत्तिर्वा मोक्ष इत्युपगच्छतस्तव मतेपि तदुभयं सादि अनादिर्वा आद्ये कृतकत्वेनानित्यत्वापत्तावपुनरावृत्तिश्रुतिविरोधः । द्वितीये मोक्षस्यासिद्धत्वगर्भसाध्यत्वाभावेन तत्साधनश्रवणादौ प्रवृत्तिर्न स्यादिति तांत्रिकः परिचोदयति ( नन्विति ) उभयविधस्यापि मोक्षस्य ब्रह्मरूपतयाऽनादित्वेपि न प्रवृत्त्यनुपपत्तिरित्याह ( सिद्धस्यैवेति । असिद्धत्वभ्रमेणेति ) लाघवेनेष्टसाधनताज्ञानस्य भ्रमप्रमासाधारणतत्साधनताज्ञानत्वेनैव प्रवर्त्तकत्वमिति भावः । अनर्थनिवृत्तिरेव मुक्तिःसाचब्रह्मस्वरूपातिरिक्ता तत्त्वज्ञानात्प्रागसिद्धैव अद्वैतश्रुतेश्च भावाद्वैतपरत्वान्न तद्विरोध इति ये मन्यंते तेषां मतं दूषयति ( अनर्थनिवृत्तिरपीति ) आनंदलक्षणमुक्तिवदनर्थनिवृत्तिरपि ब्रह्मस्वरूपैवान्यथा अद्वैतश्रुतिविरोधात । भावाद्वैतवादस्य च प्रक्रियामात्रत्वेनायुक्तत्वादिति भावः ॥

म० प्र०—तदुभयं-आनंदावाप्तिरनर्थहेतुत्वविद्यानिवृत्तिरित्युभयम. असिद्धत्वगर्भसाध्यत्वाभावेन—सिद्धत्वाभावेताभावविशिष्टत्वे सति साधनैरभिव्यक्तत्वरूपसाध्यत्वाभावेन असिद्धत्वविशेषण.दाने तु सिद्धेपि वह्न्यादौ धूमादिसाधनैरभिव्यक्तत्ववन्मोक्षरूपब्रह्मण्यपि श्रवणादिसाधनैरभिव्यक्तत्वरूपसाध्यत्वसंभवेन ज्ञानद्वारा मोक्षसाधनश्रवणादौ प्रवृत्त्यनापादनमयुक्तं स्यादतो सिद्धत्वगर्भेति विशेषणं दत्तमिति तत्साधनेति ज्ञानद्वारा मोक्षसाधनेत्यर्थः । तांत्रिकाः—शास्त्रकुशलाः उभयविधस्यापि—आनंदावाप्त्यनर्थहेत्वविद्यानिवृत्तिरूपस्यापि । लाघवेन—प्रवृत्तित्वावच्छिन्नप्रवृत्तिं प्रति प्रमेष्टसाधनताज्ञानत्वेन प्रमेष्टसाधनताज्ञानस्य कारणत्वापेक्षया प्रवृत्तित्वावच्छिन्नप्रवृत्तिंप्रतीष्टसाधनताज्ञानत्वेनेष्टसाधनताज्ञानस्य हेतुत्वे लाघवेन । भावाद्वैतपरत्वात्—अभावात्मकाद्वितीयसत्यपदार्थे सत्यपि भावात्मकाद्वितीयसत्यपदार्थो नास्तीत्यर्थपरत्वात् अन्यथा—अनर्थनिवृत्तिरूपमुक्तेर्ब्रह्मरूपत्वानंगीकारे ( अद्वैतश्रुतीति ) एकमेवाद्वितीयमित्याद्यद्वैतश्रुतीत्यर्थः ॥

मू०—लोकेपि प्राप्तप्राप्तिपरिहृतपरिहारयोः प्रयोजनत्वं दृष्टमेव यथा हस्तगतविस्मृतसुवर्णादौ तव हस्ते सुवर्णमित्याप्तोपदेशादप्राप्तमिव प्राप्नोति यथावा वलयितचरणायां स्रजि सर्पत्वभ्रमवतः पुंसो नायं सर्प इत्याप्तवाक्यात्परिहृतस्यैव सर्पस्य परिहारः प्रसिद्धः एवं प्राप्तस्याप्यानंदस्य प्राप्तिः परिहृतस्याप्यनर्थस्यनिवृत्तिर्मोक्षः प्रयोजनं

स च ज्ञानैकसाध्यस्तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेति श्रुतेः ॥

शि० म०–नन्वसत्त्वसाध्यत्वेपि मुक्तेस्तत्साधनत्वभ्रमात्कथंचिच्छ्रवणादौ प्रवृत्तिस्तथापि कथं पुरुषार्थत्वं साध्यस्यैव लोके पुरुषार्थत्वदर्शनेन साध्यत्वस्य पुरुषार्थत्वप्रयोजकत्वादित्याशंक्य किमेतत्पुरुषार्थत्वस्य व्याप्यं व्यापकं वा नाद्यः। व्याप्याभावेपि व्यापकसत्त्वनिरोधाभावात। दुःखादौ व्यभिचाराच्च न द्वितीयः। प्राप्तेष्टपरिहृतानिष्टप्राप्तिपरिहारयोरसाध्यत्वेन व्यभिचारादित्याह ( लोकेपीति ) नन्वसिद्धत्वभ्रमाच्छ्रवणादौ प्रवृत्तस्य शब्दजन्यपरोक्षसिद्धत्वज्ञानमात्रात्कथं तद्भ्रमनिवृत्तिः। कथं वा तन्मूलाविद्यानिवृत्तिः। तदुभयस्य विरोधिसाक्षात्कारसाध्यत्वादिति चेत् न, तत्त्वमस्यादि वाक्यजन्यज्ञानस्यापरोक्षत्वाभ्युपगमात। अत एव तदनुरूपदृष्टान्तमाह ( यथेति ) " हिरण्यदा अमृतत्वं भजंते" इत्यादिश्रुत्या मोक्षस्य कर्मसाध्यत्वावगमात। ज्ञानकर्मणोः समुच्चय इति ये वदंति तान्निराचष्टे सचेति नान्य इति ॥

म० प्र०–तत्साधनत्वभ्रमात्–श्रवणादौमुक्तिसाधनत्वभ्रमात्। प्रयोजकत्वात्–ज्ञापकत्वात्। एतत्–साध्यत्वं व्याप्यं यत्र साध्यत्वं तत्र पुरुषार्थत्वमिति व्याप्यं व्यापकंवा यत्र पुरुषार्थत्वं तत्र जन्यत्वमिति व्यापकं वा। दुःखादौव्यभिचाराच्च दुःखादौ साध्यत्वसत्त्वेपि पुरुषार्थत्वाभावेन व्यापकाभाववद्वृत्तित्वरूपव्यभिचाराच्च। प्राप्तेष्टपरिहृतानिष्टप्राप्तिपरिहारयोः–प्राप्तेष्टप्राप्तिपरिहृतानिष्टपरिहारयोः। ननु मोक्षेऽसिद्धत्वभ्रमाच्छ्रवणादौ प्रवृत्तिसत्त्वेपि श्रवणजन्यपरोक्षसिद्धत्वज्ञानमात्रात्कथमपरोक्षासिद्धत्वभ्रमतदुपादानाविद्ययोर्निवृत्तिरिति शंकते ( नन्विति। तद्भ्रमेति ) असिद्धत्वभ्रमेत्यर्थः ( तन्मूलेति ) असिद्धत्वभ्रममूलेत्यर्थः। तदुभयस्य–असिद्धत्वभ्रमनिवृत्तिः असिद्धत्वभ्रमोपादानाविद्यानिवृत्तिरूपोभयस्य। अतएव–तत्त्वमस्यादिवाक्यजन्यज्ञानस्यापरोक्षत्वाभ्युपगमादेव ( तदनुरूपेति ) प्राप्तेष्टप्राप्तिपरिहृतानिष्टपरिहाररूपोक्तार्थानुकूलेत्यर्थः। परममूले ( वलयितचरणायामिति ) वलयितौ वेष्टितौ चरणौ यया सा तथा तस्यामित्यर्थः ॥

मू०–अज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वनियमाच्च तच्च ज्ञानं ब्रह्मात्मैक्यगोचरं "अभयं वै जनकप्राप्तोसि तदात्मानमेवावेदहं ब्रह्मास्मि" इतिश्रुतेश्च ॥

**तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति नारदीयवचनाच्च तच्च ज्ञानमपरोक्षरूपं परोक्षत्वेऽपरोक्षभ्रमनिवर्तकत्वानुपपत्तेः तच्चापरोक्षज्ञानं तत्त्वमस्यादिवाक्यादिति केचित् मनननिदिध्यासनसंस्कृतान्तःकरणादेवेत्यपरे तत्र पूर्वाचार्य्याणामयमाशयः ॥**

शि०म०-तथाच मुक्तावुपायांतरप्रतिषेधेन हिरण्यदा अमृतत्वमित्यादेः प्रलयपर्य्यन्तस्थायिस्वर्गादिफलाभिप्रायत्वान्न दर्शपूर्णमासवज्ज्ञानकर्मणोः फले समुच्चयः किंच मोक्षस्य कर्मजन्यापूर्वसाध्यत्वे स्वर्गादिवत्सातिशयता क्षयिष्णुता शरीरसंबंधश्च स्यात । अपि चानंदाविर्भावो मोक्ष आविर्भावश्चाविद्यानिवृत्तिः साच शुक्तिरूप्यादिस्थले विरोधिसाक्षात्कारमात्रसाध्यत्वावधारणान्न कर्मसाध्येत्याह ( अज्ञाननिवृत्तेरिति ) नन्वेवमपि जीवपरैक्यज्ञानं न मुक्तिहेतुर्मानाभावात्तरति शोकमात्मविदित्यादेश्च भेदज्ञानपक्षेऽप्युपपत्तेरित्यत आह ( तच्चेति ) ननु वाक्यजन्यज्ञानं नानर्थनिवर्तकं तस्य परोक्षत्वनियमादित्यत आह ( तच्चेति ) तत्त्वमस्यादिवाक्यजन्यं चाभेदज्ञानमपरोक्षरूपमेवेति तन्निवर्तकमित्यर्थः । ननु परोक्षंजनकत्वस्वभावाद्वाक्यात्कथमपरोक्षधीरित्याशंक्याह ( तच्चेति ) तत्त्वमस्यादिवाक्यादिति साक्षादिति शेषः । तत्त्वमस्यादिवाक्यावगते ब्रह्मणि मनननिदिध्यासनजनितासंभावनानिवृत्तिसंस्कृतादन्तःकरणात प्रत्यक्षप्रमाणादेवापरोक्षज्ञानमुत्पद्यते नतु वाक्यादित्याचार्य्यवाचस्पतिमिश्राव्याचक्षते तन्मतमाह ( मननेति ) ननु करणविशेषायत्तं कार्य्यं नहि कुटजबीजाद्यवांकुरोत्पत्तिर्दृष्टपूर्वेत्याशंक्य प्रत्यक्षपरिच्छेदोक्तमर्थं स्मारयति ( तत्रपूर्वाचार्य्याणामिति ) ॥

म० प्र०-तथाच-मोक्षस्य ज्ञानैकफलत्वे स्थले-अधिकरणे ( साध्यत्वेति ) अविद्यानिवृत्तेः साध्यत्वेत्यर्थः । एवमपि-अज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वनियमेऽपि तस्य-वाक्यजन्यज्ञानस्य, तन्निवर्तकं-अज्ञाननिवर्तकं ( परोक्षजनकत्वेति ) परोक्षज्ञानजनकत्वेत्यर्थः ( साक्षादिति ) तत्त्वमस्यादिवाक्यादित्यस्यादौ साक्षादिति पदस्यशेषइत्यर्थः । अवगते-परोक्षावगतिविषये करणविशेषायत्तं सामग्रीविशेषाधीनं ( कुटजबीजेति ) कुटजः पांडुरद्रुम इति त्रिकांडशेषात् । कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपीति मेदिनीकोशाच्च कुटजशब्दो वृक्षविशेषवाचकस्तस्य बीजादित्यर्थः ॥

मू०—संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबंधनं किंतु प्रमेयविशेषनिबंधनमित्युपपादितं तथाचब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यं ज्ञानमपि अपरोक्षम् अत एव प्रतर्दनाधिकरणे प्रतर्दनं प्रति प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमतमुपास्वेतीन्द्रप्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति मामुपास्वेत्यस्मच्छब्दानुपपत्तिमाशंक्य तदुत्तरत्वेन प्रवृत्ते "शास्त्रदृष्ट्यातूपदेशोवामदेववत्"इत्यत्र सूत्रे शास्त्रीया दृष्टिः शास्त्रदृष्टिरितितत्त्वमस्यादिवाक्यजन्यमहं ब्रह्मेति ज्ञानं शास्त्रदृष्टिशब्देनोक्तमिति ॥

शि० म०—शब्दप्रमाणकं च ज्ञानमपरोक्षमित्यत्र शास्त्रदृष्टिसूत्रमुपोद्बलयति ( अतएवेति ) यतो वाक्यजन्यज्ञानमपरोक्षमतः "शास्त्रदृष्ट्यातूपदेशोवामदेववत्"इत्यत्र शास्त्रीया दृष्टिरिति व्युत्पत्त्या तत्त्वमस्यादिवाक्यजन्यमहं ब्रह्मेति ज्ञानं शास्त्रदृष्टिशब्देनोक्तमितिसंबंधः । ननु यथा ब्रह्मदृष्टिरुत्कर्षादित्यत्र दृष्टिशब्देनोपासना तथात्रापि सैव विवक्षिता परोक्षधीरित्याशंक्य प्रतर्दनाधिकरणं संग्रहेण दर्शयति ( प्रतर्दनेति ) अस्ति हि कौषीतकब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिका प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण चेत्याम्नाता तस्यां श्रूयते सहोवाच प्राणोऽस्मि प्रज्ञात्मातं मामायुरमृतमुपास्वेति तत्र किं प्राणशब्देन वायुरभिधीयते उतेन्द्रः उत जीवः परं ब्रह्मवेति चतुर्विधलिंगसंभवाच्चतुर्धा संशये इदं शरीरं परिगृह्य उत्थापयतीति वायुविकारप्राणलिंगस्य वक्तारं विजानीयादिति जीवलिंगस्य मामेव विजानीयादिति इन्द्रलिंगस्यानंदोऽजरोऽमृत इत्यादि ब्रह्मलिंगानां च प्राबल्यदौर्बल्यविवेकाभावादनिर्णयः ॥

म० प्र०—शब्दप्रमाणकं—शब्दप्रमाणजन्यं, उपोद्बलयति—प्रमाणत्वेनोपन्यस्यति ( ब्रह्मदृष्टिरुत्कर्षादिति ) इदं हि सूत्रं चतुर्थाध्यायस्य प्रथमपादे पंचमम्, अस्यार्थः । पूर्वोक्तप्रतीकोपासनेषु ब्रह्मणि मनआदिदृष्टिः कर्त्तव्या उत मनआदौ ब्रह्मदृष्टि-

रीति संशये निकृष्टे उत्कृष्टबुद्धिः कर्त्तव्येति न्यायग्राहणाद्ब्रह्मण्यवे मन आदिदृष्टिर्ब्रह्मणः प्राधान्येनोपास्यत्वोपपत्तये कर्तव्येति पूर्वपक्षे प्राप्ते ब्रूमः मनआदावेव ब्रह्मदृष्टिः कार्य्या ब्रह्मण उत्कर्षादुत्कृष्टदृष्टौ हि निकृष्टे कृतायां निकृष्टस्योत्कृष्टता भवति यथाऽमात्येराजबुद्धिः फलाय नतु राज्यमात्यबुद्धिर्नचैवं प्राधान्याभाव इष्टत्वादिति । अत्रापि–शास्त्रदृष्ट्यातूपदेश इति सूत्रेपि, सैव–उपासनादृष्टिरेव. दैवोदासिः–दिवोदासस्यापत्यम् प्रियं प्रेमास्पदम्, धाम–गृहं स्वर्गाख्यं, युद्धेनच समरयज्ञेनच । पौरुषेणच–पुरुषवृत्तियुद्धकारणोत्साहाख्यप्रयत्नेनच चकारावुभयोः कारणत्वसमुच्चयार्थाविति । परममूले ( अस्मच्छब्दानुपपत्तिमिति ) त्वंपदार्थेन किंचिज्ज्ञत्वादिविशिष्टेन तत्पदार्थस्याभेदो बाधित इति मामित्यस्मच्छब्दानुपपत्तिमित्यर्थः । वायुविकारप्राणलिंगस्येत्यादिपष्ठ्यंतानां प्राबल्यदौर्बल्यविवेकाभावादित्यनेनान्वयः ॥

मू०–अन्येषां त्वेवमाशयः ॥

शि०म०–अथवा जीवब्रह्मप्राणास्त्रय एवात्रोपास्याः । नचैवं वाक्यभेदो दोषमावहति वाक्यार्थावगमपूर्वकत्वात पदार्थानां चोक्तेन मार्गेण स्वातंत्र्यात । तस्मादुपास्यभेदादुपासनात्रैविध्यमिति पूर्वपक्षे प्राप्ते इदमुच्यते प्राणस्तथानुगमादिति प्राणशब्दवाच्यं ब्रह्मविज्ञेयं पौर्वापर्य्यालोचनया वाक्यस्य ब्रह्मपरत्वावगमात । उपक्रमे हि तमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे इति हिततमत्वेन प्राण उपदिश्यते तथोपसंहारेपि आनंदोजरोमृत इत्यानंदत्वादिना नचेदं ब्रह्मणोन्यत्संभवति जीवप्राणलिंगानां च तदानुगुण्येन नेतव्यत्वात अन्यथा भिद्येत वाक्यं नहि संभवत्येकत्वे वाक्यभेदः तदाहुराचार्य्यवाचस्पतिमिश्राः ॥

तस्मादनन्यथासिद्धब्रह्मलिंगानुसारतः ॥
एकवाक्यबलाज्जीवप्राणलिंगोपपादनमिति ॥

तस्मात्प्राणशब्दवाच्यं ब्रह्मैवेत्यर्थः ... ... ... ... ... सूत्रस्थदृष्टिशब्दस्य नोपासनापरत्वं किंत्वपरोक्षज्ञानपरत्वम् । अतएवोपक्रमगतं मामेव विजानीहीति वचनं संगच्छत इति । ननु विषयविशेषनिबंधनस्य प्रत्यक्षलक्षणस्य शाब्दजन्यज्ञानेपि सत्वाच्छास्त्रदृष्टिसूत्रविरोधाच्च आचार्य्यवाचस्पतेस्तत्त्वमस्यादिवाक्यान्यज्ञानेपरोक्षत्वोक्तिर्युक्तेत्याशंक्याह ( अन्येषांत्विति ) ॥

म०प्र०–( त्रयएवेति ) इंद्रस्य ब्रह्माण जीवे वातेऽभावात्रय एवेत्युक्तमिति भावः । अत्र–प्राणोऽस्मि प्रज्ञात्मेत्यादिवाक्यं, एवं–जीवादित्रयाणामुपास्यत्वस्वीकारे, दोषमु–

गौरवरूपदोषम् ( वाक्यार्थावगमपूर्वकत्वादिति ) प्रकृतवाक्यभेदस्येतिशेषः यस्मिन्वाक्ये वाक्यभेदस्य वाक्यार्थानवगमपूर्वकत्वं तस्मिन्नेव वाक्ये वाक्यभेदस्य गौरवदोषप्रायकत्वमत्र तु वाक्यभेदस्य वाक्यार्थज्ञानपूर्वकत्वात् गौरवरूपदोषप्रायकत्वमिति, भावः, पदार्थानां–जीवब्रह्मप्राणानाम्, केनमार्गेण–प्राबल्यदौर्बल्यविवेकाभावरूपमार्गेण वृणीष्वविचार्य्य मह्यं देहि। इदं–हिततमत्वानंदत्वादिकं, तदानुगुण्येन–ब्रह्मलिंगानुसारेण, नेतव्यत्वात्–व्याख्येयत्वात्, अन्यथा–ब्रह्मलिंगानुसारेण जीवप्राणलिंगानां व्याख्येयत्वानंगीकारे, उपपादनं–निरूपणं भवति। तस्मात्–हिततमत्वादीनां ब्रह्मान्यत्रासंभवात्, अत एव–सूत्रस्थदृष्टिशब्दस्यापरोक्षज्ञानपरत्वादेव, विषयविशेषनिबंधनस्य–प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्व ज्ञानगतप्रत्यक्षत्वमिति विषयघटितस्य ॥

मू०–करणविशेषनिबंधनमेव ज्ञानानां प्रत्यक्षत्वं न विषयविशेषनिबंधनमेकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारदर्शनात् तथाच संवित्साक्षात्त्वे इंद्रियजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वम्। ब्रह्मसाक्षात्कारेपि मनननिदिध्यासनसंस्कृतं मन एवकरणं "मनसैवानुद्रष्टव्यम्" इत्यादि श्रुतेःमनोऽगम्यत्वश्रुतिश्चासंस्कृतमनोविषया नचैवं ब्रह्मण औपनिषदत्वानुपपत्तिः अस्मदुक्तमनसो वेदजन्यज्ञानानंतरमेव प्रवृत्ततया वेदोपजीवित्वात्। वेदानुपजीविमानांतरगम्यत्वस्यैव वेदगम्यत्वविरोधात् शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयमानसप्रत्यक्षस्यशास्त्रप्रयोज्यत्वादुपपद्यते ॥

शि० म०–( करणविशेषेति ) इन्द्रियजन्यत्वं ज्ञानानांप्रत्यक्षत्वमित्यर्थः। प्रत्यक्षत्वस्य विषयविशेषायत्तत्वे सूक्ष्मवस्तुनि परोक्षप्रमाणजन्यज्ञानानांप्रत्यक्षत्वं स्याद्विषयभेदाभावात। नचेष्टापत्तिः तत्राप्रत्यक्षत्वव्यवहारविरोधात। अस्ति सूक्ष्मवस्तुनि लिपिरेखादौ पश्याम्यहं लिपिमिति पटुकरणस्य पुनः स्थविरस्य तु करणापाटववतो न पश्यामीति व्यवहार इत्याह ( एकस्मिन्निति ) ननु इन्द्रियजन्यज्ञानत्वं न प्रत्यक्षत्वं मनसोऽनिन्द्रियत्वेन सुखादिप्रत्यक्षप्रतीतावव्याप्तेरिन्द्रियत्वे चानुमित्यादावतिव्याप्तेरित्याशंक्य नहीन्द्रियजन्यज्ञानत्वं प्रत्य-

क्षत्वं किंत्विन्द्रियत्वेन तज्जन्यज्ञानत्वमनुमितिश्च मनस्त्वेन तज्जन्येति नातिव्याप्तिः । एतन्मतेच मनस इन्द्रियत्वाभ्युपगमान्न सुखादिप्रत्यक्षे ऽव्याप्तिरित्यभिप्रेत्याह ( तथाचेति ) नन्वन्यत्र यथा तथास्तु औपनिषदे ब्रह्मणि प्रमाणांतरानिवृत्तेरनर्थनिवर्तकापरोक्षप्रमितौ तत्त्वमस्यादिवाक्यं करणं कल्प्यते नच मनः करणमिदानीमपि ब्रह्मसाक्षात्कारापत्तेरित्यत आह ( ब्रह्मेति । मनएवेति ) प्रत्यक्षकरणत्वेन तस्य क्लृप्तत्वादिति भावः । मनसो ब्रह्मसाक्षात्कारकरणत्वे प्रमाणांतरमाह ( मनसैवेति ) तस्यमनोगम्यत्वे बाधकमाशंक्य निराकरोति ( नचैवमिति ) अपूर्वस्य वेदवेद्यत्वेपि तदुपजीव्यनुमानार्थापत्तिवेद्यत्ववदुपनिषद्वेद्यत्वेपि ब्रह्मणो मननादिसंस्कृततदुपजीविमनोवेद्यत्वं न विरुद्धमित्याह ( अस्मदुक्तेति ) शास्त्रदृष्टिसूत्रविरोधमुद्धरति ( शास्त्रेति ) ॥

म० प्र०—सूक्ष्मवस्तुनि—निर्दोषसंख्यादौ, तत्र—सूक्ष्मवस्तुनि इन्द्रियत्वेच मनस इन्द्रियत्वेतु, तज्जन्यज्ञानत्वम्,—इन्द्रियजन्यज्ञानत्वम्. तज्जन्येति—मनोजन्येत्यर्थः । अन्यत्र ब्रह्मेतरवस्तुनि इदानीमपि भागदशायामपि प्रत्यक्षकारणत्वेन—सुखाद्यपरोक्षज्ञानकारणत्वेन. तस्य—मनसः । अपूर्वस्य—धर्माधर्मरूपस्य. वेदवेद्यत्वेपि—लिङ्गादिघटितवेदवाक्यगम्यत्वेपि ( तदुपजीवीति ) वेदमूलकेनेन स्वर्गादिफलवैचित्र्यंविचित्रापूर्वनिमित्तकं वेदगम्यविचित्रफलत्वाद्यन्नैवं तन्नैवमात्मवदित्यनुमानेन स्वर्गादिफलवैचित्र्यं विचित्रापूर्वेण विनाऽनुपपन्नमिति तदभावव्यापकीभूताभावप्रतियोगित्वज्ञानरूपार्थापत्तिप्रमाणेनच यथापूर्वस्यवेद्यत्वंतद्वदित्यर्थः । ( तदुपजीवीति ) वेदमूलकेनेत्यर्थः परममूले ( शास्त्रप्रयोज्यत्वादिति ) शास्त्राधीनत्वादित्यर्थः ॥

मू०—तदुक्तम् ॥

अपि संराधने सूत्राच्छास्त्रार्थध्यानजाप्रमा ॥
शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परामिति ॥

शि० म०—कल्पतरुकारसंमतिमाह ( तदुक्तमिति ) अनयोश्च पूर्वमतमेव युक्तं ग्रंथकृदभिमतं तथाहि न तावत्करणविशेषनिबंधनं मंत्रिप्रत्यक्षत्वं मनस इन्द्रियत्वनिराकरणेन सुखादिप्रत्यक्षे अव्याप्तेः किंतु प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमुक्तं सूक्ष्मवस्तुन्यसमर्थेन्द्रियस्य सन्निकर्षाभावेनांतःकरणस्य बहिर्निर्गमनाभावात्तोक्तदोषः तथाच ब्रह्मसाक्षात्कारे तत्त्वमस्यादिवाक्यमेव करणं मनसैवानुद्रष्ट-

**ष्यमिति श्रुतिश्च तत्सहकारित्वविषया अन्यथा मनःकरणककामिनी-साक्षात्कारवत् ध्यानसहकृततज्जन्यतया तस्याः प्रमात्वापत्तेः। मूलप्रमाणदार्ढ्यात् प्रामाण्यमिति चेत्तर्ह्यावश्यकत्वेनोपनिषद् एव दशमस्त्वमसीतिवत्प्रमाणत्वोपपत्तेः तथाच मनोगम्यत्वाभावश्रुतिरपि मुख्यार्थसमर्थिता भवतीति ॥**

म० प्र०-परममूले ( अपिसंराधनेइति ) शास्त्रार्थध्यानजा-वेदांतशास्त्रार्थध्यानजा प्रमा शास्त्रदृष्टिर्मता "शास्त्रदृष्ट्यातूपदेशोवामदेववत्" इति सूत्रे शास्त्रदृष्टि-शब्देनाभिमता तां शास्त्रार्थध्यानजा शास्त्रदृष्टि वाचस्पतिरेव जानाति शास्त्रार्थध्यानजा प्रमैव शास्त्रदृष्टिरित्यत्र को हेतुरित्याशंक्याह अपि संराधने सूत्रात्-अपिच संराधने प्रत्यक्षानुमानाभ्यामिति सूत्रात्संराधनेपि भक्तिध्यानप्रणिधानाद्यनुष्ठानकालेपि निरस्तसमस्तप्रपंचमात्मानं योगिनः पश्यंति तत्र हेतुमाहप्रत्यक्षानुमानाभ्यामिति ज्ञानप्रसादेन शुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः ॥

यं विनिद्रा जितश्वासास्संतुष्टास्संजितेन्द्रियाः।
ज्योतिः पश्यंति युंजानास्तस्मै योगात्मने नमः ॥

इति श्रुतिस्मृतिभ्यामित्यर्थः ( सूक्ष्मवस्तुन्यसमर्थेति ) लिपिरेखादिरूपसूक्ष्मवस्तु-विषयकज्ञानजननासमर्थेत्यर्थः। उक्तदोषः-एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारानुपपत्तिरूपदोषः। तथाच-संविदः प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वरूपप्रत्यक्षत्वाभ्युपगमे दोषाभावे सति ( तत्सहकारित्वेति ) मनः-सहकारित्वेत्यर्थः। अन्यथा-ऐक्यसाक्षात्कारे मनसः करणत्वे, ध्यानसहकृततज्जन्य-तया-लक्ष्यैक्यगोचरप्रत्ययप्रवाहरूपध्यानसहकृतमनोजन्यतया, तस्य-ऐक्यसाक्षात्कारस्य ( मूलप्रमाणेति ) वेदांतवाक्यरूपमूलप्रमाणेत्यर्थः। प्रामाण्यम्-अभेदविषयकध्यानसहकृतमनोजन्यज्ञानस्य प्रमात्वम्। तर्हि-वेदांतवाक्यरूपमूलप्रमाणदार्ढ्यात् ध्यानसहकृतमनोजन्याभेदविषयकसाक्षात्कारस्य प्रामाण्ये सति, आवश्यकत्वेन-उपनिषद आवश्यकत्वेन, तथाच-उपनिषदः प्रमाणत्वे सति श्रुतिरपि-"यतो वाचो निवर्त्तते" त्यादिश्रुतिरपि, समर्थिता-उपपन्ना ॥

**मू०-तच्च ज्ञानं पापक्षयाद्भवति स च कर्मानुष्ठानादिति परंपरया कर्मणां विनियोगः अत एव "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसानाशकेन" इत्यादि श्रुतिः "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इत्यादिस्मृतिश्च संगच्छते ॥**

शि०म०-तत्र यज्ञादीनां श्रेयःपरिपंथिकल्मषनिबर्हणद्वारोपयोग इति केचित्तन्न तत्त्वज्ञाने सति संचितस्य कर्मणो निवृत्तत्वेन मुक्तिप्रतिबंधकत्वायोगात। प्रारब्धस्य च भोगैकनाश्यत्वेन यज्ञादिनिबर्हणीयत्वायोगात। तस्मात्कर्मणां नमुक्तौ विनियोगः। किंतु पापनिवृत्तिद्वारा ब्रह्मसाक्षात्कारोत्पत्तावित्याह ( तच्चेति ) तत्र प्रमाणमाह ( अनण्वेति। तमेतमिति.) तमेतमात्मानं वेदानुवचनयज्ञदानानाशकतपोभिर्वैत्तुमिच्छंतीतीच्छासाधनतया वेदानुवचनादीनि विधीयंते न तु विदंतीति ज्ञानसाधनतया, वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वादिच्छायाश्च प्रत्ययार्थतया प्राधान्यात। प्रधानेनच कार्य्यसंप्रत्ययात। नहि राजपुरुषमानयेति वस्तुतः प्रधानमपि राजपुरुषविशेषणतया शब्दत उपसर्जनमानीयते अपितु पुरुष एवशब्दतस्तस्य प्राधान्यात। एतानि च न साक्षाद्विविदिषाहेतवः किंतुदुरितनिबर्हणलक्षणपुरुषसंस्कारद्वारा 'यस्यैते चत्वारिंशत्संस्कारा' इत्यादिश्रुतेः॥

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः॥

इत्यादिवचनैश्च तथात्वावगमात्। ततश्चानित्यनैमित्तिककर्माणि मलापकर्षलक्षणपुरुषसंस्कारद्वाराविविदिषाहेतव इत्याचार्य्यवाचस्पतिमिश्रा व्याचक्षते॥

म०प्र०-तत्र मोक्षे, निबर्हणद्वारा-नाशद्वारा तत्र-कर्मणां ब्रह्मसाक्षात्कारोत्पत्तिकारणत्वे. वस्तुतः-वस्तुसामर्थ्येन, शब्दतः-शब्दसामर्थ्येन ( प्रत्ययार्थतयेति ) प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति न्यायादिति भावः। कार्य्यसंप्रत्ययात्-इतरपदार्थान्वयरूपकार्य्यबोधात अपितु किंतु पुरुषएवानीयते इत्यन्वयः तस्य पुरुषस्य एतानि च यज्ञादिकर्माणि तु यस्यैते चत्वारिंशत्संस्कारा इति गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मअन्नप्राशननिष्क्रामणचौलउपनयनानि चत्वारिवेदव्रतानि स्नानं सह धर्मचारिणीसंयोगः पंचानां यज्ञानामनुष्ठानं अष्टकापार्वणं श्राद्धं श्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्तपाकसंस्था अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यान्याग्रहायणेष्टिर्निरूढपशुबंधः सौत्रामणीति सप्तहविर्यज्ञसंस्था अग्निष्टोमोत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्यामइति सप्तसोमयज्ञसंस्था इत्येतेचत्वारिंशत्संस्काराः इत्यादिश्रुतेरित्यादिपदेन संस्कारा इत्यस्याग्रेअष्टावात्मगुणाश्चसब्राह्मणः सायुज्यमाप्नोतीति वाक्यशेषो ग्राह्यः। दया सर्वभूतेषु क्षांतिरनसूया शौचमनायासो मांगल्यमकार्पण्यमस्पृहेत्यष्टावात्मगुणाः ( महायज्ञैश्च )॥

अध्ययनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ॥
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥

इति पंचमहायज्ञैश्च । तथावगमात्-यज्ञादिकर्मणां दुरितनाशलक्षणपुरुषसंस्कारद्वारा विविदिषाहेतुत्वावगमात् ॥

**मू०-एवं श्रवणमनननिदिध्यासनान्यपि ज्ञानसाधनानि मैत्रेयी ब्राह्मणे आत्मा वा अरे द्रष्टव्य इति दर्शनमनूद्य तत्साधनत्वेन श्रोतव्यो मंतव्यो निदिध्यासितव्य इति श्रवणमनननिदिध्यासनानां विधानात् ॥**

शि० म०-विवरणाचार्य्यास्तु सर्वाण्येव कर्माणि तमेतं वेदानुवचनेनेत्यादिना ज्ञानसाधनत्वेन विधीयंते नत्विच्छासाधनतया शब्दतः प्रधानाया अपीच्छाया यज्ञादिसाध्यत्वायोगाद्वेदनस्य तूपसर्जनस्यापि स्वर्गादिवत्साध्यतया पुरुषार्थतया च भाव्यत्वेनान्वयोपपत्तेः । तथाचात्मानुभवकामो यज्ञादीननुतिष्ठेदिति विधिः परिणम्यते इति । ननु कर्मणां पापनिवृत्तिद्वारा ज्ञानजनकत्वे श्रवणादिवैयर्थ्यं स्यादित्याशंक्य नहि कर्मभिः पापनिवृत्तिस्तयाचाहत्यज्ञानमिति प्रणालिका विवक्षिता किंतु कर्मानुष्ठानात पापनिवृत्त्या शुद्धसत्त्वोदये सति विषयदोषदर्शनसंजातवैराग्यादिसाधनसंपत्तौ, श्रवणादिद्वारेत्यभिप्रेत्याह ( एवमिति ) ननु श्रवणादेर्न ब्रह्मज्ञानहेतुत्वं मानाभावात् श्रोतव्य इत्यादेश्च श्रवणादिस्वरूपे एव प्रमाणत्वात् । स स्वर्गःस्यात् सर्वान्प्रत्यविशिष्टत्वादितिन्यायेन स्वर्गादिफलत्वकल्पनयैव विधेर्भाव्याकांक्षोपशमादित्याशंक्य एतावदरे खल्वमृतत्वमित्यर्थवादावगतमोक्षसाधनत्वेन बोधितस्य सन्निहितस्यैव ब्रह्मज्ञानस्य फलत्वोपपत्तेर्नाश्रुतस्वर्गादिपरिकल्पनावकाश इत्याशयवानाह ( मैत्रेयीति । विधानादिति ) एतच्च नियमविधिमभ्युपेत्य श्रवणस्य श्रूयमाणाव्यवहितयोग्यसाक्षात्कारजनकतायाः ॥

म० प्र०-( यज्ञादिसाध्यत्वायोगादिति ) इष्टसाधने इच्छाया इष्टसाधनताज्ञानजन्यत्वादिति भावः । भाव्यत्वेन-यज्ञादिफलत्वेन । तया-पापनिवृत्त्या, आहत्य-स्वसामर्थ्येन, प्रणालिका-क्रमः, श्रवणादिस्वरूपेएव-नत्वात्मविषयकापरोक्षज्ञानजनकश्रवणादिस्वरूपे इत्येवकारार्थः । ननु श्रवणस्यात्मज्ञानफलानंगीकारे फलमंतरेणविध्यनुपपत्तेः श्रवणादिफलं वाच्यमित्याशंक्याह ( सस्वर्गइति ) विधेः-श्रवणादिविधेः भाव्येति-फलेत्यर्थः ( एतावदरइति ) एतावत्ससंन्यासंनेतिनेत्याद्युक्तरूपमात्मज्ञानमे]

वारे हे मैत्रेयि अमृतत्वममृतत्वसाधनमित्यर्थः । परममूले ( मैत्रेयीब्राह्मणेइति ) याज्ञवल्क्यस्य मैत्रेयीनामकस्वभार्यया सह संवादप्रकरणे इत्यर्थः । एतच्च-विधानादिति कथनं च, नियमविधिम्-श्रवणादिषु पक्षेऽप्राप्तस्य प्राप्तिविधायकनियमविधिम् । श्रवणादिषु नियमविध्यभ्युपगमे हेतुमाह ( अपूर्वविधित्वेति ) श्रवणादिषु प्रमाणांतराप्राप्तार्थप्रापकत्वरूपापूर्वविधित्वेत्यर्थः । श्रवणादिषु अपूर्वविधित्वायोगे हेतुमाह ( श्रवणस्येत्यादिना ) श्रवणस्य-दशमस्त्वमसीत्यादिवाक्यश्रवणस्य. योग्येति-प्रत्यक्षयोग्यदेवदत्तादिपुरुषेत्यर्थः ॥

शि० म०-अन्वयव्यतिरेकसहकृतप्रत्यक्षसिद्धतया ब्रह्मविचारेपि तन्मूलानुमानादेव ब्रह्मसाक्षात्कारहेतुत्वसिद्धेःअपूर्वविधित्वायोगात । वस्तुतस्तत्र नियमोपि न संभवति व्यावर्त्याभावात । तथाह्यात्मावाअरेश्रोतव्य इत्यत्र किं विषयनियम आत्मैव श्रोतव्य इति किंवा धात्वर्थनियमः श्रोतव्य एवेति अवहन्यादेवेतिवत् नाद्यः "तरति शोकमात्मवित्"इत्यादिश्रुत्या आत्मज्ञानस्यैव मोक्षहेतुत्वावगमेनानात्मविचारस्याप्राप्तेर्नापि द्वितीयः । मननादिभिः विरोधात नचात्मज्ञानाय वेदांतवाक्यमेव विचारयेदिति नियमविध्याश्रयणे तेन पुराणवाक्यादिव्यावृत्तिसिद्धिरिति वाच्यम् । आत्मावा अरे द्रष्टव्य इत्यादिषु वेदांतवाक्यस्य पदार्थत्वेनाश्रवणात पदार्थनियमेचातिप्रसंगात ॥

बिभेत्यल्पश्रुताद्वेदः मामयंप्रहरिष्यति ।
इतिहासपुराणाभ्यां वेदंसमुपबृंहयेदिति ॥

संभवपर्वणिवेदार्थनिर्णयोपायत्वेनेतिहासपुराणयोरपि विचार्यत्वप्रतिपादनाच्च । किंच श्रवणं नामतात्पर्यावधारणं तदनुकूलामानसी क्रियावातदुभयं शाब्दज्ञानेहेतुः तत्र नियमविध्याश्रयणेश्रवणमेव शाब्दज्ञानहेतुर्नान्यदिति स्यात्तच्चनभवति आकांक्षादेरन्तरेणतस्यनिवृत्त्ययोगाद्व्यस्यव्यावर्त्यस्यासिद्धेः । नन्वेवं श्रवणस्यशाब्दज्ञानेहेतुत्वदर्शनादेशेन श्रवणं विधीयते इत्यसंगतंस्यादिति वाच्यम सिद्धांते शाब्दज्ञानस्यापरोक्षरूपतया विरोधाभावात ॥

म०प्र०-( अन्वयव्यतिरेकेति ) अव्यवहितयोग्यार्थशब्दश्रवणसत्त्वे श्रूयमाणाव्यवहितयोग्यार्थसाक्षात्कारः तदभावे तदभाव इत्यन्वयव्यतिरेकेत्यर्थः । प्रत्यक्षसिद्धतया-मानसप्रत्यक्षसिद्धतया साक्षिरूपप्रत्यक्षसिद्धतया वा ब्रह्मविचारेपि ब्रह्मश्रवणेपि, तन्मूलानुमानादेव-अधिकारिनिष्ठब्रह्मप्रतिपादकवाक्यश्रवणं ब्रह्मसाक्षात्कारजनकंयोग्याव्यवहितार्थकशब्दश्रवणत्वात् यत्र योग्याव्यवहितार्थकशब्दश्रवणत्वं तत्र योग्याव्यवहितार्थसाक्षात्कारजनकत्वमिति सामान्यव्याप्तौ दशमस्त्वमसीत्यादिवाक्य-

श्रवणवदिति प्रत्यक्षमूलकानुमानादेव, तत्र-श्रवणादिषु, नियमोपि-नियमविधिरपि ( किंविषयनियमइति ) आत्मैव श्रोतव्य इति श्रवणविषये किं नियम इत्यर्थः ( अनात्मविचारस्याप्राप्तेरिति ) यद्यपिरागादनात्मश्रवणप्राप्तिरस्ति तथापि मोक्षफलकानात्मश्रवणस्य रागादप्राप्तेर्व्यावर्त्याभावः एकफलकोभयप्राप्तावेव नियमविधिस्वीकारादितिभावः। तेन-नियमेन, अपदार्थनियमे-श्रोतव्य इत्यत्रापदार्थवेदांतवाक्ये नियमस्वीकारे, अतिप्रसंगात्-अपदार्थत्वस्य तुल्यत्वेन पुराणवाक्यमेवविचारयेदिति नियमप्रसंगात, समुपबृंहयेत्-संशयविपर्ययागोचरार्थप्रतिपादकतांनयेत् ( तदनुकूलेति ) तात्पर्यनिश्चयजनकेत्यर्थः। तत्र-उक्तश्रवणे, तच्च-श्रवणस्यैव शाब्दज्ञानहेतुत्वं च। नन्वाकांक्षाद्यन्यस्यैवैवकारेणव्यावृत्तिः स्यादित्याशंक्याह ( अन्यस्येति ) आकांक्षाद्यन्यस्येत्यर्थः। एवं-विधिंविनैव ( शाब्दज्ञानेति ) परोक्षशाब्दज्ञानेत्यर्थः। असंगतम्-शाब्दज्ञानस्य परोक्षत्वेनापरोक्षात्मज्ञानसाधनतयाश्रवणविधानमसंगतम्॥

**शि० म०-उक्तस्य श्रवणस्य तात्पर्य्यविषयकत्वेन परंपरया आत्मविषयतया श्रोतव्य इति निर्देशो न विरुध्यते किंच न वेदांतानां श्रवणादिविधिपरत्वं वाक्यभेदप्रसंगात। अन्यथा ब्रह्मपरत्वाभावे ब्रह्मणोऽसिद्धिप्रसंगः। ननु सहकार्य्यंतरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदित्यत्र श्रोतव्य इत्यादि वाक्यानां विधायकत्वांगीकारान्न तद्विरोध इति चेत न, पक्षेणेति वदता सूत्रकृता निपुणानां विध्यनपेक्षत्वं जडानां तु सर्वसंगपरित्यागपूर्वकब्रह्मज्ञाने प्रवृत्तिर्नस्यादिति तेषामेव प्रवृत्तिसिद्ध्यर्थंविध्यंगीकरणमिति सूचितम्। अन्यथा पक्षेणेति विशेषणवैयर्थ्यापत्तेः। नचानुवादवैयर्थ्यं तस्य ह्ययमौपनिषद आत्मा यतो मोक्षहेतुसाक्षात्कारसाधनविचारविषय इति प्रकारणात्मनः॥**

म० प्र०-ननु श्रवणस्य तात्पर्यविषयकत्वेनाऽऽत्मविषयकत्वाभावादात्मसाक्षात्कारमनूद्य श्रोतव्य इति श्रवणं विधीयते इत्युक्तिरनुपपन्नेत्याशंक्याह ( उक्तस्येति ) तात्पर्य्यनिश्चयरूपस्य तात्पर्य्यनिश्चयानुकूलमानसीक्रियारूपस्यवेत्यर्थः। परंपरया-स्वविषयविषयत्वरूपपरंपरया. स्वं-श्रवणमिति संबंधघटकस्वशब्दार्थः। वेदान्तानाम्-मैत्रेयीब्राह्मणस्थश्रोतव्यइत्यादिवाक्यानां, वाक्यभेदप्रसंगात्-मैत्रेयीब्राह्मणस्थश्रोतव्य इत्यादिवाक्यानाम् श्रवणादिविधिपरत्वे ब्रह्मपरत्वेच विषयभेदसत्त्वेन वाक्यभेदप्रसंगात्, अन्यथा-श्रोतव्य इत्यादिवाक्यानाम् श्रवणादिविधिपरत्वस्वीकारे अन्यथेत्यस्यैव वा विवरणं ब्रह्मपरत्वाभावे इति, ब्रह्मणोऽसिद्धिप्रसंगः-मैत्रेयीब्राह्मणस्य ब्रह्मपरत्वाभावेन मैत्रेयींप्रति ब्रह्मविषयकनिश्चयाभावप्रसंगः ( सहकार्य्यंतरवि-

धिरिति ) इदं हि सूत्रं तृतीयाध्याये चतुर्थपादस्यसप्तचत्वारिंशत्संख्याकम्। अस्यार्थः बृहदारण्यके हि बाल्यं च पांडित्यं च निर्विद्याथ मुनिरमौनंच मौनंच निर्विद्याथ ब्राह्मण इति श्रूयते अत्र किंनिदिध्यासनाख्यं मौनं विधीयते नवेति संशयेऽत्र विध्यभावादश्मुनिरित्यत्र न मौनविधिरिति पूर्वपक्षे सिद्धांतमाह ( सहाकार्यंतरविधिरिति ) फलभूतसाक्षात्कारे श्रवणाद्यपेक्षाया सहकार्यंतरस्यमौनस्यानिदिध्यासनाख्यस्य विधिरित्यर्थः । ननुगार्हस्थ्यमाचार्यकुलं मौनंवानप्रस्थमित्यत्र मौनशब्दस्य पारिव्राज्ये प्रयोगात्कथमत्र मौनं निधिध्यासनं स्यादत आह ( तृतीयमिति ) श्रवणमननद्वयापेक्षया तृतीयं निदिध्यासनमेवात्रमौनं विधेयमित्यर्थः । कस्मादयं मौनविधिस्तत्राह ( तद्वतइति ) ब्रह्मपरोक्षज्ञानवतः पूर्ववाक्ये प्रकृतस्य मन्यामिन इत्यर्थः । ननु सूक्ष्मवस्तुसाक्षात्कारहेतोः निदिध्यासनस्य प्राप्तत्वान्न विधेयत्वमत आह ( पक्षेणेति ) यस्मिन्पक्षेभेददर्शनप्राप्तिस्तस्मिन्पक्षे प्राप्त्यभावाद्विधिरर्थवानित्यर्थः । ननु ब्रह्मपरवाक्ये कथं मौनविधिरित्याशंक्य दृष्टांतमाह ( विध्यादिवदिति ) यथादर्शपूर्णमासप्रधानपरवाक्येऽन्वाधानादेरंगजातस्य विधिस्तद्वदित्यर्थः । प्रधानमारभ्यांगपर्यंतो विधिस्तस्यादिर्विध्यादिः प्रधानमिति यावदिति ( ननदि इति ) तस्य श्रवणादिविधेर्वाक्यभेदापत्त्यादिदोषरनुपपत्तिर्नेत्यर्थः । तेषामेव—जन्मशुद्धानामेव, अन्यथा—सर्वान्प्रतिविध्यंगीकारे ( विशेषणेति ) विशेषकथनेत्यर्थः । तस्य—अनुवादस्य ॥

**श्रवणं नाम वेदांतानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूलमानसी क्रिया । मननं नाम शब्दावधारितेर्थे मानांतरविरोधशंकायां तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः । निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योपकृष्यात्मविषयकस्थैर्यानुकूलो मानसो व्यापारः ॥**

शि० म०-विष्णुरुपांशुयष्टव्य इतिवत्स्तुत्यर्थत्वेनोपपन्नः अतएव भाष्यकृता समन्वयसूत्रे लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवंतीत्युक्तम । अत एव द्वितीयवर्णके टीकाकृता यद्यपि किंविधिनास्वयमेव विज्ञानहेतौ पुरुषार्थसाधने प्रवर्त्तत इतिविध्यभावः कण्ठरवेणांगीकृतः तत्रैव च विवरणाचार्यैर्निदिध्यासितव्य इति चात्मप्रतिपादनपरवाक्यस्यवाक्यभेदाभावाय स्तुतिपरत्वादित्युक्तम । तस्मादिहापि द्रष्टव्यपदसमभिव्याहारेण प्रदर्शितन्यायेन श्रोतव्य इत्यादेरप्यर्हार्थत्वमेव युक्तं न विधायकत्वमित्यास्तामातिविस्तरः । ननु दर्शनवच्छ्रवणादि

